मिथिला विद्यापीठ ग्रन्थमाला    द्वादशतम पुष्पम् (१ प्राचीनाचार्यग्रन्थावली)

कविवरवेणीदत्तकृता

# अलङ्कारमञ्जरी

भूतपूर्वधर्मसमाजसंस्कृतमहाविद्यालयप्राध्यापकेन

महोपाध्यायकविशेखरश्रीबदरीनाथशर्मणा

सम्पादिता ।

डा० श्रीजनार्दनमिश्रेण

मिथिलासंस्कृतविद्यापीठप्रधानेन प्रकाशिता

# ALANKARAMANJARI

OF

# VENIDATTA

*Edited by*

Kavishekhar Badarinatha Jha

*Published by*

*Dr. Janardan Mishra*

**Director, Mithila Institute**

*of*

**Post-Graduate Studies and Research**

**in Sanskrit Learning**

**DARBHANGA.**

**1961**



The Government of Bihar established the **Mithila Institute** of Post-Graduate Studies and Research in Sanskrit Learning at **Darbhanga** in **1951**, with the object, Inter-alia to promote advanced studies and research in Sanskrit learning, to bring together the traditional Pandit with their profound learning and modern scholar with their technique of research and investigations, to publisn works of permanent value to scholars. This Institute is one of the six others started by this Government as a token of their homage to the tradition of learning and scholarship for which ancient Bihar was noted. Apart from the Mithila Institute, five others have been established and have been doing useful work for the last few years–the *Nalanda* Institute of Research and Post-Graduate studies in Buddhist learning and Pali at *Nalanda*, the *K. P. Jayaswal Research* Institute at Patna, the Bihar Rashtra Bhasha Parishad for Research and advanced studies in Hindi at Patna, the Institute of Post-Graduate Studies and Research in Jain and Prakrit learning at Vaishali and the Institute of Post-Graduate studies and Research in Arabic and Persian Learning at patna. In the establishment of the Mithila Institute the State Government received a generous donation from the Maharajadhiraja of Darbhanga for construction of the building on a plot of land also donated by **him.**

As part of this programme of rehabilitating and re-orientation of ancient learning and scholarship, the editing and publication of this volume has been undertaken with co-operation of Scholars in Bihar and outside. The Government of Bihar hope to continue to sponsor such projects and trust that this *humble service to the* world of scholarship and learning would bear fruit in the fulness of time.

# उपन्यासः ।

अये साहित्यकोविदाः सुहृदः

तीरभुक्तिजनपदप्रतीकं श्री १०८ भक्तिसिद्धेश्वरीसान्निध्यप्रसिद्ध 'सरिसव' ग्रामोपसंश्लिष्टं 'हाटी' समभिधानसञ्चसथमधिवसन् भर्तृहरिनिर्वेदनाटक[1] 'हरिहरसुभाषितप्रभृतिश्रव्यकाव्यानां प्रणेतुर्हरिहरोपाध्यायस्य श्रोत्रियोचितविद्यासदाचारचारुणि वात्सकरमहाकुले विष्वग्विश्रुतवैदुष्याज्जगन्नाथोपाध्यायादुद्भूतः[3] स्वस्त्रीयस्य मिथिलामहीमहेन्द्रश्रीमाधवसिंहस्य सभास्तारो महाकविर्भंगवद्भक्तो वेणीदत्तशर्मा स्वान्तःसुखाय सहृदयसमुदयामोदनाय च रसनिरूपणात्मकं प्राग् रसकौस्तुभं पश्चादलङ्कारनिरूपणात्मिकामलङ्कारमञ्जरीमिमां सरलसरणेन क्रमेण प्राणैषीत् । तेन वैक्रमोनविंशशताब्द्याः प्रारम्भोऽस्य कवेः स्थितिसमयः सुखेन निर्धारयितुं शक्यते मिथिलेशमाधवसिंहसमयस्य[4] निर्णीतत्वात् तत्प्रपौत्रपुत्राणां व्याकरणाचार्यश्रीवैद्यनाथशर्मश्रीकुञ्जनाथशर्मप्रभृतीनामद्यत्वेऽपि विद्यमानत्वाच्च ।

किञ्च महामहोपाध्यायो गोविन्दठक्कुरः काव्यप्रदीपावसाने—

'दीपिकाद्वितयं कन्ये प्रदीपद्वितयं सुतौ ।
स्वमतौ सम्यगुत्पाद्य गोविन्दःशर्म विन्दति' ॥

इति लिखन् पुरा मतौ पत्नीत्वं स्त्रीत्वनिर्दिष्टप्रबन्धयोः पुत्रीत्वं पुंस्त्वनिर्दिष्टप्रबन्धयोः पुत्रत्वं च प्राचीकटत्, प्रायस्तदीयसरणिमेवानुसरन्नसावपि ज्यायसि रसकौस्तुभे पुत्रत्वं यवीयस्यामलङ्कारमञ्जर्यां तु पुत्रीत्वं प्रादर्शयदिति न परोक्षं प्रेक्षावताम् ।

रसकौस्तुभरचनायामनेन नूनं महाकवेर्भानुदत्तमिश्रस्य रसमञ्जरीं रसतरङ्गिणीं चादर्शतया परिकल्पयता विलक्षणं लक्ष्यलक्षणनिर्माणकलाकौशलमात्मनो दर्शितमिति तत्त्रितयालोचकैः सुविभाव्यम् ।

---

१ नाटकमिदं स्व० म० म० मुकुन्दशर्मभिर्व्याख्याय प्रकाशितम् । २ इदं प्राध्यापकश्रीरमानाथशर्मभिः परिष्कृत्य प्रकाशितम् ३ तथा च रसकौस्तुभान्त्यश्लोकः—

"आसीद्यस्तीरभुक्तौ ललितकरमहावंशजश्चारुकर्मा,
पञ्चप्रास्त्राब्जभानुः प्रथितवरयशाः श्रीजगन्नाथशर्मा ।
चक्रे तस्यात्मजन्मा सुरहरचरणाम्भोरुहासक्तचित्तो,
वेणीदत्तः प्रयत्नादतिरुचिरतरं कौस्तुभं सद्रसानाम् ।

इति ।४ महाराजमाधवसिंहो यावनसनाब्दा ११८३ तः, १२१४ यावन्मिथिलामशाशदिति मिथिलाभाषामयेतिहासे निर्णीय लिखितम् ।

इयमलङ्कारमञ्जरी नालङ्काराणां प्रकारभूयस्त्वकरी कुवलयानन्दादिवत्, न च प्रचुरपरिष्कारभू रसगङ्गाधरादिवत् न वा निगूढ-शब्दार्थनिधिः काव्यप्रकाशादिवत्, किन्तु विषमतमेऽलङ्कारदर्शनसानुमति समारुरुक्षूणां सरला निश्रेणी श्रेणीव तावत् परमामुपकृतिं विदध्यादिति सम्भावयामि ।

तत्र रसकौस्तुभो मत्सवंश्येन पं० श्रीलेखनाथशर्मणा प्रागेव सम्मुद्रय प्रकाशितः सहृदयवतां सम्भावनामवापत् । अलङ्कारमञ्जरी तु नितरामप्रसिद्धा विहारतत्त्वान्वेषणसमितिप्रकाशितसूचीपत्रमात्रोल्लिखिताभिधाना चिरान्वेषणादायुष्मतः सौराठमामाभिजनस्य व्याकरण-साहित्याचार्यश्रीफेकूमिश्रस्यादर्शपुस्तकप्रदानौदार्येण शुभद्यां 'एम्०ए०' विरुदविभूषितस्य न्यायाचार्य श्री धीरानन्दमिश्रस्य परिश्रमेण च मयाऽधिगता कीटपटलकवलिताक्षराऽपि यथामति कथञ्चन सम्पूर्य संशोधिता मिथिलासंस्कृतविद्यापीठाध्यक्षाणां ( डाक्टर ) श्रीजनार्दनमिश्रमहोदयानामादेशेन प्राध्यापकश्रीमदनन्तलालठक्कुराणां प्रबन्धेन च सम्मुद्रय प्रकाशिता तत्रभवतां पुरस्तादुपस्थाप्यते ।

आदर्शपुस्तकान्तरानुपलम्भेन मद्बुद्धिवैगुण्येन च सम्भावितानामत्यशुद्धीनां गुणपक्षपातेन क्षमां विचक्षणानभ्यर्थय इति

मिथिला
वसन्तपञ्चमी
२१-१-६१

निवेदयते विद्वद्वृन्दवशंवदो—
बदरीनाथ ( झा ) शर्मा ।

# श्लोकानुक्रमणिका

| श्लोकाः | पृष्ठम् |
| --- | --- |
| व्यञ्जनागम्य एवार्थः .... | २६ |
| व्याजेन गोपनं यत्र — .... | ३३ |
| शटा हरीणाम्.... | १६ |
| शब्दार्थालङ्कृतीनां तु .... | १ |
| शरीरकान्त्या.... — | ४० |
| शिशुस्त्रीतिर्यगादीनां .... | २४ |
| शैलाश्चरन्ति.... | १४ |
| श्रीकृष्णरुचिसम्पर्कात् .... | ४६ |
| श्रीखण्डपङ्कपटलम् .... | ४४ |
| श्रीगोविन्दपदद्वन्द्व .... | १ |
| श्रीरिवाभाति — .... | ६ |
| सङ्केताभिधानम्.... | १८ |
| सजातीयानुपूर्वीक — | ५ |
| सज्जनाः खलु.... | २३ |
| सत्यासक्तमना.... | ६ |
| सत्ये धर्मतनूभवो .... | १२ |
| सपत्नीस्तनकस्तूरी .... | ४१ |
| समानदर्शनोद्बुद्ध .... | ४२ |
| समुदयते हिमधामा .... | २१ |
| समुपेते निजदयिते.... | ३५ |
| सम्बन्धः स्यादनेकत्र .... | ३१ |
| सरागे हृदये तस्याः .... | ४६ |
| सर्वथाऽपि वृथा — .... | २३ |
| सह कमलकलापैः .... | २५ |
| सानन्दं यनदन्तिनो .... | १५ |
| सामान्यस्य पदार्थस्य — | २३ |
| साम्यातिशयतो.... | ११ |
| सारं भवेऽत्र धरणी .... | ३६ |
| सुतरां विलसति.... | १३ |
| सुन्दरगोकुलवृत्तं.... | ५ |
| सुषमाविषयविनोद .... | १० |
| सूक्ष्मसारौ तथा ज्ञेयौ .... | ७ |
| संगोप्योऽपि प्रकटितः — | १३ |
| स्तुतिर्निन्दामुखेन.... — | २५ |
| स्मेरं सङ्कलयन्.... | २४ |
| स्वगुणं यत् परित्यज्य .... | ४५ |
| हरिणा शोभते लक्ष्मीः .... | ३४ |
| हारः भवाम्लम्.... | २४ |
| हाराः पतन्ति.... | २६ |
| हृदयभवाधिकबाधां .... | १३ |
| हेतुसत्त्वेऽपि कार्यस्य .... | २२ |

# ॥ अलङ्कारमञ्जरी ॥

दारितदुरितकदम्बो रोलम्बोल्लसितमौलिना ललितः ।
कल्याणं सुचिरं वो रुचिरं लम्बोदरः कुरुताम् ॥१॥

श्रीगोविन्दपदद्वन्द्वकञ्जरञ्जनकारिणी ।
'वेणीदत्तेन' कृतिना कृताऽलङ्कारमञ्जरी ॥२॥

अलङ्कारं विना नारी यथा न खलु रोचते ।
तथैव तं विना वाणी कवीनां नैव शोभते ॥३॥

शब्दार्थालङ्कृतीनां तु लक्षणानि मनीषिभिः ।
कृतानि तेषां स्वल्पानि लक्ष्याणीह [प्रदर्शये] ॥४॥

[तत्र] प्रथमं[1] वक्रोक्तिं लक्षयति—

यदुक्तमन्यथा वाक्यमन्यथाऽन्येन [योज्यते] ।
वक्रोक्तिः सा परिज्ञेया श्लेषतः काकुतो द्विधा ॥५॥

श्लेषतो यथा मदीयरसकौस्तुभे[2]—

कस्त्वं चक्री व्रज निजपुरं नात्र सर्पस्य वासो-
गोपालोऽहं विपिनसविधे गोष्ठमस्ति प्रयाहि ।

---

१ एतदुपलक्षणंपुनरुक्तवदाभास चित्रयोरपि तदुक्तं सोमेश्वरेण—'वक्रोक्तिरप्यनुप्रासो यमकश्लेषचित्रके । पुनरुक्तवदाभासः शब्दालङ्कृतयस्तु षट् ॥' इति । २ ग्रन्थोऽयं रसनिरूपणात्मकः ।

पद्मेशोऽहं व्रजति[1] न धरामण्डले चण्डरश्मिः
कृष्णो[2] राधावचनविजितः पातु वोऽभीष्टमित्थम् ॥६॥

यथा वा—

का ते मूर्ध्नि जटावली वद पते वामां सरोजाननां
वामा किं[3] पुरुषोऽस्मि शैलतनये मुग्धे तदेवोच्यताम्
अन्या का परिराजतेऽनलशिखा दिव्येति मन्दाकिनीं
शर्वाण्याः परिगोपयन् पशुपतिर्भव्याय भूयाच्चिरम् ॥७॥

काकुतो यथा—

परवशतां समुपेतो दयितो दूरं परं गन्ता।
नायास्यति मधुसमये सखि रतिनिलये मनोज्ञनुपः ॥८॥

अत्र नायास्यतीति नायिकयोक्तम् अपित्वायास्यत्येवेति सख्या योजितम् अतः काकुवक्रोक्ति।

अनुप्रास लक्षयति—

वर्णसाम्यमनुप्रासश्छेकवृत्तिगतो द्विधा।

छेकं [लक्षयति]—

छेकोऽनेकेषु वर्णेषु साम्यं स्यात् सकृदेव हि।

छेकानुप्रासो यथा—

दृशा पश्यामि गोविन्दमरविन्दविलोचनम्।
गोपालबालसंवेशं[4] कालिन्दीपुलिने वने ॥९॥

---

१ चरतीनिपाठः साधीयान्। २ 'इत्थं राधावचनविजितः पातु वः कृष्णचन्द्रः' इति पाठेऽक्रमत्वदोषपरिहारः। ३ 'पुरुषोऽसि' इति पाठान्तरम्। ४ सङ्केशमिति पाठान्तरम्।

[वृत्त्यनुप्रासं लक्षयति]—

यदेकस्य तु वर्णस्य समत्वं स्यान्मुहुर्मुहुः ।
तन्प्रोक्तो वृत्त्यनुप्रासो रसविद्याविशारदैः ॥१०॥

वृत्त्यनुप्रासो यथा—

जम्बालजालकलितानकञ्ज भाल-
लम्बालकालमलिमञ्जुलकण्ठमाल ।
भव्यालवालशिशुकेलिसरोमराल
गोपाल पाहि करुणामय मां रमाल[1] ॥११॥

यथा वा मदीयविरुदावल्याम्[2]—

रम्भा जम्भारिमम्भापणमपि सहसा सञ्जहौ चित्रलेखा
केषामेषा [विशेषान्] पतति न चरणे चोर्वशी गर्वशीला ।
तारा हारावमुच्चैः कलयति भजते पौरहूतीं च दूती-
मङ्के लङ्केश्वरस्य व्रजति न दयिता त्वद्गुणाकृष्टचित्ता ॥१२॥

[वृत्त्यपराख्याः प्रसङ्गाद् रीतीराह]—

माधुर्यव्यञ्जकैर्वर्णैरुपनागरिका मता ।
ओजःप्रकाशकैर्वर्णैः परुषा कोमला परैः ॥१३॥
रीतयस्त्रिविधा ज्ञेयाः काव्ये काव्यविशारदैः ।
एतास्तिस्रोऽथ वैदर्भीगौडीपाञ्चालजाः स्मृताः ॥१४॥

---

१ रसिक । २ इयं प्रायो माधवविरुदावली मिथिलेशमाधवसिंहस्य चैतो-
दराकवेर्भागिनेयत्वाद्रुपजीव्यत्वाच्च ।

उपनागरिका यथा—

आनन्दकन्दमरविन्दविनिन्दकाक्षं
कुन्दप्रसूनसमसुन्दरदन्तकान्तिम् ।
श्रीनन्दनन्दनममन्दशशाङ्कवक्त्रं
बृन्दावने परिसरन्तमनुस्मरामि ॥१५॥

अथवा[1] चुम्बकम्—

मन्दमन्दमरविन्दलोचनं सञ्चरन्तमयि नन्दमन्दिरे ।
पूर्णचन्द्रसमसुन्दराननं तूर्णमिन्दुवदने विलोकय ॥१६॥

परुषा यथा मदीयरसकौस्तुभे—

कृत्वा प्रौढप्रतिज्ञां निखिलभटपुरोगर्जिना येन पूर्वं
पीतं दुरशासनोरस्थलमयरुधिरं दुर्गसङ्ग्रामभूमौ ।
सोऽहं[2] दुर्योधनस्य द्रुपदनृपसुताधर्षिणो मन्दबुद्धेः
किञ्चिद्भ्रूभङ्गशीलो गिरिगुरुगदया चोरुमाचूर्णयामि ॥१७॥

तथा वा—

युष्मत्कोदण्डकाण्डप्रदलितवपुषां भूभुजां भूमिभाजा-
माजावा जग्मुरम्भोरुहललितदृशो या वनं शोकवत्यः ।
तामामुत्तुङ्गपीनस्तनमहह धरापाल पारीन्द्रबालाः[3]
प्रोद्यत्कुम्भीर[4]कुम्भस्थलयुगलवरभ्रान्तितो दारयन्ति ॥१८॥

---

१ एतत्सन्दिग्धम् । उपनागरिकाया उदाहरणान्तरप्रदर्शनाय यथा वेत्तु-चितं प्रतिभाति । २ भीमसेनः । ३ सिंहशावकाः । ४ कुम्भीरो माहो हस्तिधरो वा ।

कोमला यथा—

सुन्दर गोकुलवृत्तं श्रुतिमथ चित्तं स्थिरं क्रियताम् ।
तव विरहे धृतबाधा कथमपि राधा दिनं नयति ॥१९॥

यथा वा मदीयरसकौस्तुभे—

कथमथ वारं वारं लपितमुदारं हरे तनुषे ।
त्वच्चरितं नखरेखा कुटिल विशेषादियं ब्रूते ॥२०॥

[लाटानुप्रासं लक्षयति]—

पदार्थयोरभेदे स्याद् योजनामात्रभेदतः ।
विभिन्नशब्दधर्ये[१] तु लाटानुप्रास ईरितः ॥२१॥

लाटानुप्रासो यथा—

परिवमति न यस्याः सन्निधौ प्राणनाथो-
भवति तपननामा शीतधामा हि तस्याः ।
परिवमति न यस्याः सन्निधौ प्राणनाथो-
भवति तपननामा शीतधामा हि तस्याः ॥२२॥

यमकं लक्षयति—

सजातीयानुपूर्वीकद्वितयेन पदेन च ।
भिन्नार्थबोधकं प्राहुर्यमकं बहुभञ्जकम् ॥२३॥

[यमकं] यथा—

समये समये समुपागते सविकले[२] विकले कुसुमालिभिः ।
असुरते सुरते हरिसङ्गिचौ सुवदने वद नेति न साम्प्रतम् ॥२४॥

१ विभिन्नशब्दधीविषये। २ सुविकले इतिपाठान्तरम् ।

तथा वा—

वारिदेन[1] विना सखि सायं यामिनीपत्रनोदरतोयम् ।
वाचते शरणं कमुपेता[2] यामिनीपत्रनोदरतोयम् ॥२५॥

[शब्दश्लेषं लक्षयति]—

एकोच्चारणतो यत्र भिन्नार्थप्रतिपादकः ।
शब्दोभवति स श्लेषोऽलङ्कारः समुदाहृतः ॥२६॥

शब्दश्लेषो[3] यथा—

सत्यासक्तमना विभूषणरतिर्भूत्याभिमंशोभितः
कौमारोत्तमशक्तिहृष्टहृदयश्चक्रीधरोमादृतः ।
चञ्चच्चन्द्रकखण्डमण्डितशिरोरूपं दधानोऽर्जुनं
श्रीकृष्णो गिरिजापतिश्च भवतां भव्याय भूयाच्चिरम् ॥२७॥

'कौ' इत्यत्र 'चक्रीश्वरोमादृत.' इत्यत्र च शब्दगतश्लेषो बोध्यः ।

यथा वा—

मृतात्रासो वामो विषमशनमाशा हि वसनं
शिरोजालं माला सततमपि बाला तनुधरा ।
शिवस्येयं जाता जगति यदि हा तात कुदशा
तदन्यः को गण्यः स्थितवति विधौ मूर्ध्नि कुटिलः ॥२८॥

अत्र 'विधौ' विधातरि चन्द्रे च शब्दश्लेषः ।

अथार्थालङ्कारा लक्षणीयाः । ते च—

---

१ पङ्क्त्यधिकारीयं छन्दः । २ अस्फुटम् । ३ स च वर्णपदलिङ्गभाषाप्रकृतिप्रत्ययविभक्तिवचनानां श्लिष्टत्वादष्टविधोऽन्यत्र द्रष्टव्यः ।

उपमाऽनन्वयस्तद्वदुपमेयोपमा ततः ।
उत्प्रेक्षाऽथ ससन्देहोरूपकापह्नुती तथा ॥२९॥
अर्थश्लेषः समासोक्तिः प्रोक्ता चैव निदर्शना ।
अप्रस्तुतप्रशंसाऽतिशयोक्ती परिकीर्त्तिते ॥३०॥

प्रतिवस्तूपमा तद्वद् दृष्टान्तो दीपकं तथा ।
तुल्ययोगित्वनामैकोव्यतिरेकः प्रकीर्त्तितः ॥३१॥

आक्षेपालङ्कृतिः प्रोक्ता कथिता च विभावना ।
कीर्त्तिता च विशेषोक्तिर्यथासङ्ख्यं तथेरितम् ॥३२॥

कथितोऽर्थान्तरन्यासनामालङ्कार उत्तमः ।
विशेषश्च तथाख्यातोविरोधोऽपि प्रकीर्त्तितः ॥३३॥

आख्याताश्च स्वभावोक्तिव्याजस्तुतिसहोक्तयः ।
विनोक्तिश्च तथाज्ञेया परिवृत्तिः प्रहर्षणम् ॥३४॥

भाविकं काव्यलिङ्गं च पर्यायोक्तं तथैव च ।
उदात्तनामाऽलङ्कारः समुच्चय उदीरितः ॥३५॥

पर्यायश्चानुमानं च ज्ञेयः परिकरस्तथा ।
व्याजोक्तिः परिसङ्ख्या च तथैवान्योन्यमुत्तरम् ॥३६॥

सूक्ष्मसारौ तथा ज्ञेयौ कथिताऽलङ्कृतिस्तथा ।
समाधिस्तु समं तद्वद्विषमं चाधिकं पुनः ॥३७॥

प्रत्यनीकं मीलितं च स्यातामेकावलीस्मृती ।
भ्रान्तिश्चापि प्रतीपश्च सामान्यं च विशेषकः ॥३८॥

तद्गुणातद्गुणौ चैव व्याघातः परिकीर्त्तितः ।
संसृष्टिसङ्करावेते चार्थालङ्कारसञ्ज्ञकाः[1] ॥३९॥

तत्रोपमां लक्षयति—

भिन्नत्वे सति साधर्म्यमुपमानोपमेययोः ।
सत्यमारोपितं वा स्यादुपमा सा प्रकीर्त्तिता ॥४०॥

यथा—

कृशाङ्गि शीतांशुरिवाननं तव
प्रफुल्लनीलोत्पलवद् विलोचने ।
सुधेवोक्तिरियं च लक्ष्यते
मनोऽधुना कोष्णमिवेदमद्भुतम् ॥४१॥

यथा वा—

बाले तावकवदनं विधुरिव भाति ।
अमृतमिवाधरमधु किं न प्रददाति ॥४२॥

यथा वा—

बालाः शैवालतुल्याः कुवलयसदृशे लोचने ते च वक्त्रं
चञ्चत्पद्मानुकारं विशदकलसमं बाहुयुग्मं विशालम् ।
ज्वारण्यैर्वारिकल्पैर्हृदइव सुमृतोनाभिदेशः पुरस्ता-
दुत्तापं हन्त बाले कलयसि मम किं चित्तमेतन्न विद्मः ॥४३॥

अनन्वयं लक्षयति—

एकं पदं वोपकं स्यादुपमानोपमेययोः ।
एकवाक्यगतं यत्र तत्रानन्वय उच्यते ॥४४॥

---

१ परिगणनेऽस्मिन् प्रदीपपरिगणितकारणमालाया अनुल्लेखः तत्रा-
परिगणितस्य प्रहर्षणस्योल्लेखश्च बोध्यः ।

यथा—

विस्फुरन्ति[1] त्वदङ्गानि त्वदङ्गानीव भूतले ।
त्वदीयवदनं कान्ते त्वदीयवदनोपमम् ॥४५॥

यथा वा—

कथयन्ति हरे नाथ त्वामिव त्वां मनीषिणः ।
भुक्तिमुक्तिप्रदातारमतस्त्वां शरणं भजे ॥४६॥

[ उपमेयोपमां लक्षयति ]

उपमानोपमेयत्वमुपमेयोपमानता ।
यदा मिथोभवेदेवमुपमेयोपमा तदा[2] ॥४७॥

उपमेयोपमा यथा—

श्रीरिवाभाति नियतं मतिस्ते पृथिवीपते ।
राजन् मतिरिवाभाति श्रीरियं शर्मदायिनी ॥४८॥

अत्र श्रिय उपमानत्वं मत्याः सर्वजनोपास्यत्वेन मत्याश्चोपमानत्वं श्रियः स्थिरत्वेन बोध्यम् ।

यथा वा—

तनुवद् भासते कान्तिः कान्तिवद् भासते तनुः ।
अचलेव प्रभो कीर्तिस्तव कीर्तिरिवाचला ॥४९॥

अत्र तनोरुपमानत्वं कान्त्याः प्रतिपक्षमुपचीयमानत्वेन कान्त्याश्चोपमानत्वं तनोर्मनोहरत्वेन धरण्या उपमानत्वं कीर्त्याश्चिरकालस्थायित्वेन कीर्त्या उपमानत्वं च विस्तृतत्वेन ज्ञेयम् ।

---

१ अत्र द्वितीयसदृशव्यवच्छेदो व्यज्यते । २ अत्र तृतीयसदृशव्यवच्छेदो व्यज्यते ।

[ उत्प्रेक्षां लक्षयति ]

उपमानांश[1] एव स्यात् कोटिरुत्कटतांगतः ।
यत्रोपमेयसन्देह उत्प्रेक्षा सा प्रकीर्तिता ॥५०॥
ध्रुवं नूनमिव प्रायो मन्येशङ्केपदादयः ।
उत्प्रेक्षावाचकाः शब्दाः प्राज्ञैर्विज्ञैरुदीरिताः ॥५१॥

उत्प्रेक्षा यथा रसकौस्तुभे—

अंके स्थिता धनरुचेर्मधुसूदनस्य
पंकेरुहायत[2]दृशी परिराजतेस्म ।,
शङ्के कलातिविमला शशिनः कलङ्कः
पर्यङ्कमध्यकलिता भुवि सङ्गतेति ॥५२॥

यथा वा—

लावण्यामृतजलधौ मुखशशिनो मज्जतः सुदृशः ।
वेणी धौतकलङ्कश्रेणीन्यवधारितं विदुषा ॥५३ ।

यथा वा—

सुषमाविषयविशादे रमणीमुखचारुताविजितः ।
नखमिषतो हिमधामा किमु वामाचरणपङ्कजे पतितः ॥५४॥

सन्देहं लक्षयति —

भेदोक्तिमहिता चैकाऽभेदोक्तिमहिता परा ।
एवं द्वैविध्यमापन्ना सन्देहालङ्कृतिः स्मृता ॥५५॥

---

१ उपमेय उपमानयोरुत्कटैककोटिकशङ्कैव सम्भावनालक्षणोत्प्रेक्षेति सारम् ।
२ आयतशब्दो रुचिरार्थकोऽपि ।

एको निश्चयगर्भः स्यान्निश्चयान्तः परस्तु यः ।
भेदोक्तिसहितस्त्वेवं द्विविधः परिकीर्त्तितः ॥५६॥

निश्चयगर्भसन्देहो यथा—

१रुद्रोऽयं समुपागतः किमु रुषा रूयातः स पञ्चाननः
किं वाऽयं प्रलयानलो दहति नो सर्वा दिशः सर्वतः ।
कालः किं महिपासनः स विदितः सङ्ग्रामभीमाङ्गने
त्वामालोक्य विपक्षचक्रभटाः सन्देहदोलायिताः ॥५७॥

निश्चयान्तो यथा—

किं पीयूषमयूख एष रमते नाङ्कः समुद्वीक्ष्यते
किं पङ्केरुहमुखैर्विकसितं नालं क्व वाऽम्बु जलम् ।
इत्थं संशयसंश्रयाश्रितहृदा बालेऽतिकाले मया
स्मेरत्वेन मनोहरेण विदितं वक्त्रं तवेति ध्रुवम् ॥५८॥

भेदोक्तिसहितो यथा—

आदाय पूर्णशशिकान्तिचयं नु तस्या-
श्चेतोभवेन विधिना समकारि वक्त्रम् ।
नैवेदृशं तु वदनं जरसाऽवलीढो-
निर्मातुमत्र भुवने कुशलो विधाता ॥५९॥

रूपकं लक्षयति—

साम्यातिशयतो यः स्यादुपमानोपमेययोः ।
भेदधीकालिकोऽभेदारोपो रूपकमुच्यते ॥६०॥

---

१ इह द्वितीय चतुर्थ पञ्चवाक्यार्थशेषाणां प्रथम तृतीय पञ्चम वाक्योत्थापितसंशयनिवर्त्तकत्वादेव निश्चयान्तव्यपदेश ।

रूपकं यथा—

वंशीस्वनस्तनितमुच्चतरं दधानं
पीताम्बरायततडिल्लतिकानिशानम्।
वृन्दावने रुचिरकुञ्जगतं निकामं
वन्दे मुकुन्दजलदं नयनाभिरामम् ॥६१॥

यथा वा—

वक्त्रबिन्दु[1]लसदिन्दुमञ्जुला
चारुदन्तरुचिचन्द्रिकोज्ज्वला ;
शीलशीतलमतिस्तु कामिनी-
यामिनी सुकृतिनाऽभिनीयते ॥६२॥

रूपकमाला यथा—

सत्ये[2] धर्मतनूभवो भुजबले भीमो रणप्राङ्गणे
गाण्डीवी नकुलः प्रतीकसुषमासम्पद्विशेषे श्रुतः।
प्रज्ञायां सहदेव एव विदितः कर्णोऽर्थिसन्तोषणे
षट् ते पाण्डुसुतास्तु कर्णसहिताश्चित्रं त्वमेकः प्रभो ॥६३॥

[ अपह्नुतिं लक्षयति ]—

उपमेयं व्यवस्थाप्य यत्रासत्यतया पुनः।
उपमानस्य सत्यत्वकथनं स्यादपह्नुतिः ॥६४॥

---

१ वक्त्रबिम्बेति पाठान्तरम्। २ इह प्राचीनचरणत्रये मालारूपकम्

यथा—

[1]मित्रात्ययमानसमये सखि वैरिणोऽस्य
चन्द्रस्य हन्त करसङ्गमशङ्कयाऽसौ ।
अम्भोजिनी सपदि सायमुपेतभृङ्ग-
श्रेण्यामिषेण गरलं कवलीकरोति ॥६५॥

[ अपह्नुतिप्रकारान्तरं लक्षयति ]—

सङ्गोप्योऽपि प्रकटितः केनचिद्धेतुना पुनः ।
योऽर्थस्तस्यापलापो यः सोऽप्यन्योऽपह्नवः स्मृतः ॥६६॥

यथा—

सुतरां विलसति लतिका तरुकिसलयपाणिना स्पृष्टा ।
ध्यायसि किं सखि पुरुषं नहि नहि त्रासन्तिका रीतिः ॥६७॥

यथा वा—

हृदयभवाधिकबाधां शमयतु को नागरादन्यः[2] ।
इच्छसि किं रतिचतुरं नहि नहि सखि भेषजं ब्रूमः ॥६८॥

[ अर्थश्लेषं लक्षयति ]—

परिवृत्तिसहः शब्द एको यत्रार्थयोर्द्वयोः ।
बोधको जायते योऽर्थश्लेषः सोऽभिहितो बुधैः ॥६९॥

यथा—

उच्चैरिशिरा[3] बहुतराम्बुधराभिमैत्री-
नागावलीसततशोभितवासदेशः ।

---

१ मित्रं सुहृत् मित्रः सूर्यश्च । २ नागरो विदग्धो नगरनिवासी नागर मुस्तकौषधं च । ३ शिर शृङ्गं च । नागौ हस्तिसर्पौ ।

वित्तेशकिङ्करकुलादृतपादपद्मः
संराजते धरणिभृन्नितरां धरायाम् ॥७०॥

[ समासोक्तिं लक्षयति ]—

प्रकृतेऽप्रकृताभेदबुद्धिर्या समवस्तुभिः ।
समासोक्तिरसौ त्रेधा कार्यलिङ्गविशेषणैः ॥७१॥

यथा—

रे रे धीरसमीर पुष्पजरजोवाहाद्रिकल्लोलिनी-
पञ्चच्छीकरवृन्दतुन्दिल सखे धन्यस्त्वदन्योऽस्ति कः ।
यद्वामासुरतावसानसमये स्वेदाभिरामाननो-
त्वामालिङ्गति सादरं भुजलतामुत्तोल्य दूरान्मुहुः ॥७२॥

अत्र प्रकृते वायावप्रकृतस्य सनायकस्याभेदबुद्धिः ।

यथा वा—

अभिनर झटिति निकुञ्जम् चलपल्लवपाणिना महती ।
त्वामाह्वयति वनाली सहचरि वनमालिनाऽऽदिष्टा ॥७३॥

अत्र प्रकृतायां वनाल्यामप्रकृतायाः कृष्णनिदेशकारिण्या अभेदबुद्धिः ।

[ निदर्शनां लक्षयति ]—

उपमाकल्पकं वाक्यं यत्रासम्भविनोर्द्वयोः ।
शब्दार्थयोः प्रकथनं तत्रैका स्यान्निदर्शना ॥७४॥

यथा—

शैलाश्चरन्ति नभसो निपतन्ति तारा-
धराधरा धरणिगा यदि वा भवन्ति ।

नारायणाद्धि विमुखा यदि भक्तलोकाः
सन्त्यज्यते खलु तदा महता महत्त्वम् ॥७५॥

यथा वा —

दहनो भवति सुशीतो यदि वरश्रीतोऽविलेशयो रमते ।
भुञ्जति जगति तदानीमनुचितमार्गोमहो पिशुनः ॥७६॥

[ प्रकारान्तरं लक्षयति ]—

उपमाकल्पकं वाक्यं यत्रसम्भवतोर्द्वयोः ।
अर्थयोस्तत्र भवति द्वितीया तु निदर्शना ॥७७॥

यथा—

परसन्तापको यस्तु सोऽपि सन्तापभाग् भवेत् ।
शशी विरहिसन्तापी हरनेत्राग्नितापितः ॥७८॥

[ अप्रस्तुतप्रशंसां लक्षयति ]—

अप्रस्तुतप्रशंसा स्याद् यदाऽप्रस्तुतवस्तुनः ।
कथनं प्रस्तुतार्थस्य भवेदुत्कर्षबोधकम् ॥७९॥

यथा—

सानन्दं वनदन्तिनो मदजलक्लिन्नोच्चकुम्भस्थला
संक्रीडन्ति लसन्ति मत्तमहिषा युद्धाय दम्भोद्यताः ।
आधावन्ति विनोदिनस्ततइतो मुग्धाः कुरङ्गादयः
शङ्के सम्प्रति मन्दिरे बहुतरे राजन् मदीयारिणाम् ॥८०॥

---

१ नीत इति पाठान्तरम् । २ शब्दायन्ते । अतएव नात्मनेपदम् ।

अत्राप्रस्तुतस्य वैरिपलायनस्य कथनेन शत्रुंप्रति राजप्रयोगस्योत्कर्षो बोध्यते।

यथा वा—

उत्पत्तिर्वसुदेवरुद्धभवने वृद्धिस्तु नन्दालये
लीला गोकुलबालकैरनुपदं हिंसा हि हिंसादिषु।
उच्चैः प्रेमधनञ्जये[1] यदुपतेर्युद्धोत्सवो भारते
को जानाति मनागपि क्षितितले चित्रं चरित्रं विधेः ॥८१॥

अत्राप्रस्तुतस्य यदुपतेः कथायाः कथनेन प्रस्तुतस्य विधेश्चित्रचरितस्योत्कर्षः।

[ अतिशयोक्तिं लक्षयति ]—

भेदज्ञानसहायं यदाहार्यं निश्चयात्मकम्।
विज्ञेयाऽतिशयोक्तिः सा यत्रान्याभेदबोधनम् ॥८२॥

यथा—

कनकलतायां कमलं कमले नीलोत्पलद्वितयम्।
तदुपरि वरमधुपाली कलयति किल चञ्चलं चेतः ॥८३॥

यथा वा—

रम्भायुग्मे कनकलतिका श्रीफले सन्दधाना
प्रादुर्भूतं शशविरहितं तत्र शीतांशुबिम्बम्।
तत्र प्रान्ते परमकुटिला सद्वितीया मृणाली
ज्ञातुं चित्रं किमपि चरितं क: समर्थो विधातुः ॥८४॥

[ प्रकारान्तरं लक्षयति ]—

यदि चेदादिभिः शब्दैरसम्भावित वस्तुनः।
उक्तिर्वाचोपमानस्यातिशयोक्तिरियं परा ॥८५॥

१ अर्जुने।

यथा—

नक्षत्राणि रजःकणान् गणयितुं रोद्धुं गतिं मारुतीं
सप्तद्वीपवतीमिमां वसुमतीमुत्तोल्य धर्तुं करे ।
बाहुभ्यां यदि तर्तुमम्बुधिगणं कोऽपि क्षमश्चेद् भवेत्
सङ्ख्यातुं कुशलो जनो भुवि तदा श्रीनाथ युष्मद्गुणान् ॥८६॥

यथा वा—

बिम्बं शरत्पर्वणि निष्कलङ्कं
सान्द्रसुधं चेदुदियात् सितांशोः ।
तेनोपमीयेत मुखं तदानीं
सानन्दमिन्दीवरलोचनायाः ॥८७॥

अतिशयोक्तेः प्रकारान्तराणि[1] विस्तरभयादुपेक्षितानि ।

[ प्रतिवस्तूपमां लक्षयति ]—

प्रतिवस्तूपमां विद्यादुपमानोपमेययोः ।
वाक्ययोरेकधर्मश्चेद् विभिन्नपदबोधितः ॥८८॥

यथा—

तापं तनोति तपनो दहनः प्रदाहं
शैत्यं करोति पवनो मलयाचलस्य ।
क्षारं जलं जलनिधेर्यदि किं विचित्रं
सङ्गीयते हि महतामचलः स्वभावः ॥८९॥

१ त्रीणि ।

अत्र महत्तामुपमा तपनादीनां पर्यवस्यति ।

यथा वा—

तपोभिरुग्रैर्गिरिजे भवत्या
हृतं मनो योगमलं भवस्य ।
विक्षोभितं वारि गभीरमब्धे-
र्न ज्योत्स्नया किं ललितैर्विकासैः ॥६०॥

अत्र ज्योत्स्नाया उपमा गिरिजाया अब्धेरुपमा भवस्यावसेया ।

[ दृष्टान्तं लक्षयति ]—

गम्यते यदि सादृश्यं प्रणिधानवशाद् द्वयोः ।
दृष्टान्तनामाऽलङ्कारस्तदा विद्भिरुदीर्यते ॥६१॥

यथा—

आलोकिते त्वयि भविष्यति कृष्ण तस्या-
हृष्टं मनः सपदि कुण्डिनभूपजायाः[1] ।
पूर्वाचले समुदिते तरणौ प्रभाते
सद्यो विकासमयते कुसुमं नलिन्याः ॥६२॥

अत्र रुक्मिण्याःहृदय कमलवत् कृष्णस्य दर्शनं सूर्यवदिति प्रतीयते ।

यथा वा—

धीरोऽप्यधीरतां याति विलोक्य सुदृशो मुखम् ।
पूर्णं चन्द्रमसो बिम्बं दृष्ट्वाऽब्धिस्तरलायते ॥६३॥

[ दीपकं लक्षयति ]—

सकृदेवाभिधानं चेदुपमानोपमेययोः ।
धर्मिणो धर्मरूपाया क्रियाया दीपकं स्मृतम् ॥६४॥

---

१ रुक्मिण्या ।

यथा—

दानेन भूपरिवृढस्तपसा कुलस्त्री
वादेन चारुनिनयेन च विप्रसिंहः ।
सूर्योदयेन दिवसं शशिना त्रियामा
शीलेन भूमिवलये किल भाति लोकः ॥६५॥

यथा वा—

शाटाहरीणां मणयोऽहियूनां
मुक्ताः समुन्मत्तमतङ्गजानाम् ।
कुचाः प्रशस्तान्वयकन्यकानां
ग्रहीतुमर्हाः किमु जीवितानाम् ॥६६॥

अत्रैकया क्रियया[1] सहान्वयः ।

[ तुल्ययोगितां लक्षयति ]—

अप्रस्तुतानां वस्तूनां प्रस्तुतानामथापि वा ।
एकधर्माभिसम्बन्धे कथिता तुल्ययोगिता ॥६७॥

यथा—

किं ते पुरः सुतनु चम्पकदाम का वा
सौदामनी कनककेतकगर्भगश्रीः ।
स्मेराभिराममुखमण्डलसन्निधाने
पङ्केरुहस्य शशिनश्च कथा वृथाऽभूत् ॥६८॥

---

१ प्रथमोदाहरणे भानक्रियया द्वितीयोदाहरणे तु ग्रहणानर्हत्वधर्मेण प्रस्तुतानामन्वयः ।

यथा वा—

दानप्रवाहपरितोषितभूसुरस्य[1]
सत्कीर्त्तिचन्द्रधवलीकृतभूतलस्य ।
कल्पद्रुमस्त्रिदशतोषणमात्रहेतुः
कस्ते पुरः क्षितिप का खलु कामधेनुः ॥९९॥

[ व्यतिरेकं लक्षयति ]—

उपमानाद् यदाधिक्यमुपमेयस्य[2] कथ्यते ।
तदेव व्यतिरेकाख्यमलङ्कारं प्रचक्षते ॥१००॥

यथा—

करतलप्रतिनिन्दितपल्लवा
पटतिरस्कृतपद्मरुचिः स्फुटम् ।
मुखविनिर्जितशारदशर्वरी-
पतिनिभा भुवि भाति सुलोचना ॥१०१॥

यथा वा—

नीचाशयमकूपारं[3] समुन्नतमहाशयः
गाम्भीर्यादिगुणै रामो जितवान् मैथिलीपतिः ॥१०२॥

आक्षेपं लक्षयति—

यः प्राकरणिकत्वेन वचनार्हस्य वस्तुनः ।
शब्दगत्या निषेधः स्यात् स आक्षेपः प्रकीर्त्तितः ॥१०३॥

---

१ विशिष्टशक्त्या कथितपद्यत्वबाध । २ उपमानाधिक्येऽपि रत्नाकर-रूपकानुमत्या व्यतिरेकोऽर्वाचीनै स्वीक्रियते । ३ समुद्रम् ।

यथा—

नलिनीदलमपि[1] तुलयति सा दहनेन।
अलमथ सम्प्रति मुरहर बहुकथनेन ॥१०४॥

यथा वा—

उत्तापं तनुते हिमांशुरनिशं श्रीखण्डशैलानिल-
स्तस्या मञ्जुविलोलखञ्जनदृशो निर्माति मर्मव्यथाम् ।
माला पुष्पमयी तनौ च निहिता मन्त्रः स्फुलिङ्गायते
भूयः किं कथयामि निष्कृप हरे हा हन्त नाहं ब्रुवे ॥१०५॥

[विभावनां लक्षयति]—

विनाऽपि कारणं यत्र कार्योत्पत्तिर्निबध्यते ।
विभावनामलङ्कारं तत्र धीराः प्रचक्षते ॥१०६॥

यथा—

समुदयते हिमधामा मा वामा तापमाधत्ते ।
विकसति वनकुसुमाली मुरहर तालीदलद्युतिं लभते ॥१०७॥

अत्र कारणं विनैव नायिकायास्तापस्य पाण्डुरोगस्य च कार्यस्योत्पत्तिः।

यथा वा—

भवत्यनातपे स्वेदो विना[2] वातेन वेपथुः ।
अशीते किञ्च रोमाञ्चः कएप सखि ते क्रमः ॥१०८॥

---

१ सरसा छन्दः। २ आतपादिकारणाभावेऽपि स्वेदादिकार्योदयादिह विभावना।

[विशेषोक्तिं लक्षयति]—

हेतुसत्त्वेऽपि कार्यस्य यत्रानुत्पत्तिरुच्यते।
काव्यज्ञैर्मन्यते तत्र विशेषोक्तिरलङ्कृतिः ॥१०६॥

यथा—

निकसति नहि मुखपद्मं सद्मनि समुपागते मित्रे।
त्यजति न सखि तव रागं श्रुतिभागं सेवते चक्षुः ॥११०॥

यथा वा—

तव वदनामृतरश्मावुदिते कस्मात् परो दयिते।
सम्भवति स्मरदाहो मनसि तदाहो न जानीमः ॥१११॥

[यथासङ्ख्यं लक्षयति]—

उद्देश्येषु विधेयानां नियतेन क्रमेण यः।
अन्वयस्तमलङ्कारं यथासङ्ख्यं प्रचक्षते ॥११२॥

यथा वा—

एकस्त्वं नृपते विवेकविदितो रुच्यो रणग्रामणी
, सम्मानं रतिकौशलं प्रहरणप्रागल्भ्यमुल्लासयन्।
मित्राणां मृगशावसुन्दरदृशां विद्वेषिणां चान्वहं
सौख्यं प्रेमचयं भयं च हृदये संवर्द्धयन् वर्तसे ॥११३॥

यथा वा—

अरौ हरौ बन्धुजने च राजन्
पुष्णन् भयं भक्तिभरं सुखं च।

१ शैत्यकारणीभूतचन्द्रसद्भावेऽपि शैत्यानुदयाद् विशेषोक्तिः।

ज्वलत्प्रतापेन निशुद्धबुद्धया
घनेन चैको रमसे धरायाम् ॥११४

[अर्थान्तरन्यासं लक्षयति]—

सामान्यस्य पदार्थस्य विशेषेण समर्थनम् ।
प्रथमोऽर्थान्तरन्यासप्रकारः परिकीर्तितः ॥११५॥

यथा—

सज्जनाः खलु नोज्झन्ति दुष्टानपि समाश्रितान् ।
विषमुद्गिरतो नागांश्चन्दनः किं विमुञ्चति ॥११६॥

यथा वा मदीयरसकौस्तुभे—

सर्वथाऽपि वृथाज्ञेया प्रार्थना दुर्जने मुहुः ।
सुधासावि तच्चित्तोऽपि फणी न विषमुज्झति ॥११७॥

[प्रकारान्तरं लक्षयति]—

विशेषस्य तथाऽर्थस्य सामान्येन समर्थनम् ।
[1]द्वितीयोऽर्थान्तरन्यासप्रकारः समुदीरितः ॥११८॥

यथा—

आदावन्ते च तरणेर्बिम्बं स्पर्शसुखप्रदम् ।
उदये प्रलये चापि स्थितिरतुल्या महीयसाम् ॥११९॥

[विरोधाभासं लक्षयति]—

वस्तुगत्या विरोधस्य विरहेऽपि विरुद्धयोः ।
[2]अभिधानमलङ्कारो विरोधाभास इष्यते ॥१२०॥

१ कारणेन कार्यस्य कार्येण कारणस्य च समर्थनेऽप्यर्थान्तरन्यासः ।

२ जातेर्जातिगुणक्रियाद्रव्यैः सह गुणस्य गुणक्रियाद्रव्यैः सह क्रियायाः क्रियाद्रव्याभ्यां सह द्रव्यस्य च द्रव्येण सह विरुद्धतयाऽऽभासमानतया विरोधाभासस्य दशभेदाः ।

यथा—

हारः प्रवालं नलदो मृणालं
श्रीखण्डखण्डं मलयानिलश्च ।
भवद्वियोगे हरिणायताक्ष्या-
दावाग्निवत् तापभरं तनोति ॥१२१॥

यथा वा—

कोमलमपि खलवचनं व्यथयति खलु मानसं सुधियाम् ।
निष्ठुरतरमपि रचितं सतां पुनर्मोदमातनुते ॥१२२॥

[ स्वभावोक्तिं लक्षयति ]—

शिशुस्त्रीतिर्यगादीनां स्वक्रियारूपवर्णनम् ।
स्वभावोक्तिमलङ्कारं ब्रुवते काव्यकोविदाः ॥१२३॥

यथा वा—

एकेन स्तनमेकं स्पृशति हरिः पाणिना मातुः ।
अपरेण स्तनमपरं धृत्वा मधुरं पयः पिबति ॥१२४॥

यथा वा—

स्मेरं सङ्कलयन्शिखण्डवलयं मूर्ध्नाऽभिसन्धारयन्
कालिन्दीपुलिने वने तत इतो गाश्चारयन् निर्भयम् ।
वंशीचारुरवेण गोपवनिताचेतांसि सम्मोहयन्
साकं गोकुलबालकेन रमते मायाधरो माधवः ॥१२५॥

[ व्याजस्तुतिं लक्षयति ]—

स्तुतिर्निन्दामुखेनैव निन्दा स्तुतिमुखेन च ।
द्विविधा रसशास्त्रज्ञैर्व्याजस्तुतिरुदीरिता ॥१२६॥

यथा—

[1]गङ्गे भस्मविलेपनं विषधराभूषाः शिरःस्था जटाः
शार्दूलद्विपचर्म चारु वसनं भालेऽनलीया शिखा ।
माला मुण्डमयी गले च गरलं त्वं चापि मौलिस्थिता
देवि त्वज्जलमज्जने तनुभृतां सद्यः क एष क्रमः ॥१२७॥

यथा वा—

गङ्गाभुजङ्गवरतुङ्गतरङ्ग सिन्धो
किं ते स्तवेन बहुना मणिमण्डितस्य ।
वारां निधेश्च वडवादहनैकबन्धोः
पातुं पयः क्षितितले बत कः समर्थः ॥१२८॥

[ सहोक्तिं लक्षयति ]—

एकस्यत्रत्यन्वितोधर्म उभयत्रापि गम्यते ।
सहशब्दबलाद्यत्र सहोक्तिः साऽवगार्यते ॥१२९॥

यथा—

सह कमलकलापैः कोकमामोदयन्तः
सह निबिडतमिस्रैरिन्दुकान्तिं हरन्तः ।

१ इह निन्दामुखेन गङ्गादेव्याः स्तुतिः प्रतीयते । २ अत्र स्तुतिमुखेन समुद्रस्य निन्दाऽवगम्यते ।

सह कुमुदकदम्बैर्वीरनारीनिषादं
दिशिदिशि कलयन्तो भान्ति भानोर्मयूखाः ॥१३०॥

यथा वा—

हाराः पतन्ति विमलाः सह नेत्रवारां
धाराभिराशु विरहे तव राधिकायाः ।
श्वासः सहैव निशया पृथुतां च धत्ते
गोपीपते किमधिकं विनिवेदयामि ॥१३१॥

[ विनोक्तिं लक्षयति ]—

अन्यं[1] विना यदाऽन्यस्य स्यादशोभनता तदा ।
विनोक्तिनामालङ्कारं व्याहरन्ति मनीषिणः ॥१३२॥

यथा—

भक्तिं विनामधुरिपोः स्मरणं विदूरं
भक्तिश्च नैव हृदये स्मरणं विनाऽऽस्ते ।
मुक्तिर्विना तदुभयं नहि मर्त्यलोके
मुक्त्या विना न खलु गच्छति मर्त्यताऽपि ॥१३३॥

यथा वा—

निशा न रम्या विधुना विनेयं
विना रजन्या मलिनो मृगाङ्कः ।
विनोभयं कैरविणी न हृष्टा
सृष्टा विधात्रा मदनोत्सवाय ॥१३४॥

---

१ अन्यं विनाऽन्यस्य समीचीनत्वेऽपर प्रकारो विनोक्तेरन्यैरङ्गीकृतः ।

[ परिवृत्तिं लक्षयति ]—

यः समैरसमैर्वाऽपि गुणैर्विनिमयो भवेत् ।
परिवृत्तिमलङ्कारं तं काव्यज्ञाः प्रचक्षते ॥१३५॥

यथा—

दर्शं दृष्ट्वा प्रीतो निशि निशि शशाङ्काय रुचिरां
चकोरः स्वच्छन्दं सुखमनममाप्नोति नियतम् ।
शशाङ्को रामाणां प्रियविरहितानां च सुदृशां
दर्शं नीत्वा दत्ते वपुषि वत तापं बहुतरम् ॥१३६॥

[ प्रहर्षणं[1] लक्षयति ]—

यत्नं विनैव सिद्धिर्या वाञ्छितार्थस्य जायते ।
प्रहर्षणपदाख्येयां ब्रुवते तामलङ्कृतिम् ॥१३७॥

यथा—

[2]विद्युच्छटाघनघटावृतमन्तरीक्षं
भानुप्रभाविरहि सम्प्रति केशवोऽयम् ।
नक्तं बिभेति नितरामिति बालमेनं
त्वं प्रापय स्वभवनं वृषभानुकन्ये ॥१३८॥

[ भाविकं लक्षयति ]—

भूतस्य भाविनो वाऽपि पदार्थस्य तु वर्णनात् ।
यत् प्रत्यक्षायमाणत्वं तद् भाविकमुदीरितम् ॥१३९॥

---

१ उद्योतकारादिभिस्त्वेष समाधावेवान्तर्भावित. । २ माण्डीरवने नन्दस्योक्तिरियम् ।

यथा—

एणीदृशो लोचनखञ्जनाञ्जनं
लग्नं प्रपश्यामि हरे तवाधरे ।
[1]तदङ्कसङ्गाय च मानिने पुनः
साक्षात्करोम्यच्युत चञ्चलं मनः ॥१४०॥

यथा वा—

इयं भवित्री हरिणायताक्षी
सौदामनीकाञ्चनतुल्यकान्तिः ।
जगज्जिगीषोर्मदनाधिपस्य
पश्याम्यहं सङ्गरजैत्रकेतुः ॥१४१॥

अत्र पश्यामीति[2] ।

[ काव्यलिङ्गं लक्षयति]—

वाक्यार्थस्य क्वचित् क्वापि पदार्थस्य विशेषतः ।
यत् कारणस्य कथनं काव्यलिङ्गं तदुच्यते ॥१४२॥

यथा—

[3]पुरा मुरारे तव नाम न स्मृतं
शरीरभाजेत्यपराधितं मया ।
स्मृत्याऽद्य मुक्तेन च न स्मरिष्यते
तदेतदाणोयुगलं क्षमस्व मे ॥१४३॥

१ तत्पदेन प्रतिपक्षनायिकायाः परामर्शः । २ भाविन- प्रत्यक्षायमाणत्वम् ।
३ इह वाक्यार्थस्य हेतुता ।

[ पर्यायोक्तं लक्षयति ]—

व्यञ्जनागम्य एवार्थो यत्र भङ्ग्याऽभिधीयते ।
काव्यज्ञास्तमलङ्कारं पर्यायोक्तं प्रचक्षते ॥१४४॥

यथा—

रामकृष्णौ पुरो वीक्ष्य हृदये कंसभूपतेः ।
सह शौर्येण धैर्येण सम्मदोऽवस्थितिं जहौ ॥१४५॥

अत्र कंसः शौर्यादिशून्योऽभूदिति व्यज्यते ।

यथा वा—

अनङ्गरङ्गप्रतिमं भवन्तं
विलोकयन्त्या मृगलोचनायाः ।
हृदि त्रपा वासमुदं मुरारे
चिरन्तनीमप्यजहाद् वताशु ।१४६॥

अत्र सा निस्त्रपाऽभूदिति व्यङ्ग्यम् ।

[ उदात्तं लक्षयति ]—

उत्कर्षव्यक्तये[१] यत्तु वर्णनीयस्य वस्तुनः ।
उदात्तं तद् विशेषेण कथितं काव्यकोविदैः ॥१४७॥

यथा—

युष्मद्भिद्गुगणद्वारि मदवारिविशोभिताः ।
बृंहितानि वितन्वन्ति करिणो धरणीमणे ॥१४८॥

---

१ महतामुपलक्षणत्वेऽस्य प्रकारान्तरमन्यत्राभिहितम् ।

यथा वा—

युष्मद्भिक्षुगणाङ्गनाः समुचितामुत्तार्य वक्षस्थला-
न्मुक्तालीं परितः क्षिपन्ति भवनप्रान्तेषु कौतूहलात् ।
मोक्तुं तामथ मानसाख्यसरसीहंसाः सवंशा मुदा
सम्प्राप्ताः क्षितिपालबाल भवतो गायन्ति नित्यं यशः ॥१४९॥

अत्र भिक्षुगृहसम्पद् वर्णनीयस्योत्कर्षं व्यनक्ति ।

[ समुच्चय लक्षयति ]—

एकस्यैव[1] प्रधानस्य कारणस्य यदेतरे ।
कार्योत्पत्तौ सहायाः स्युस्तदा ज्ञेयः समुच्चयः ॥१५०॥

यथा—

क्रूराः कामशरा मुहुः प्रतिदिशं गर्जन्ति पाथोधराः
केकाः सङ्कुलयन्ति मत्तशिखिनो वर्षासु हर्षाकुलाः ।
कान्तो हन्त विदूर एव हृदयं दीनं नवीनं वयः
सख्यः सन्ति न सन्निधौ कथमहं प्राणान् विधर्तुं क्षमा ॥१५१॥

अत्र दुःखे प्रधानकारणं कामशरा परे तत्साहाय्यकारिणः ।

यथा वा—

आच्छन्नं गगनं घनैरनुपमैः केकामनेकाममी
कुर्वन्ति प्रमदाद्धृताश्च शिखिनः प्रौढाः कदम्बानिलाः ।
भीमा प्रावृषि यामिनी विदधते कोलाहलं दर्दुरा
मातः सम्प्रति पश्यते सखि कथं जागर्ति देवः स्मरः ॥१५२॥

---

१ गुणयोः क्रिययोर्गुणक्रिययोर्वा यौगपद्येऽस्य प्रकारान्तरम् ।

अत्र मानभङ्गे मेघाच्छन्नं गगनं प्रधानकारणम् इतरे तत्सहायकाः ।

[ पर्यायं लक्षयति ]—

सम्बन्धः स्यादनेकत्र क्रमेणैकस्य वस्तुनः ।
यस्तं पर्यायनामानमलङ्कारं प्रचक्षते ॥१५३॥

यथा—

आसीत् पूर्वमगाधसिन्धुसलिले निस्सृत्य तस्मादरं
शम्भोर्भालतलेऽनलेन वलिते तिष्ठन्निङ्करो भूषयन् ।
स्फीतः[1] शीतकरोऽथ विस्तृततमोमध्ये गतश्चारुतां
सोऽयं सम्प्रति बाधते यदि तदा कर्म किमाचक्ष्महे ॥[1]५४॥

अत्रैकस्य शशिनः क्रमेणानेकत्र सम्बन्धः ।

यथा वा—

उद्भूतः करिराजकुम्भयुगले वृद्धिं गतो भास्करे
प्रातः पङ्कजकोटरेषु ललितां चक्रे चिरावस्थितिम् ।
लीलां संविदधौ तवाधरदले सोऽयं सरोजानने
रागः सम्प्रति लक्ष्यते तु हृदये बाले किमित्यद्भुतम् ॥१५५॥

अत्रैकस्य[2] रागस्यानेकत्र सम्बन्धः ।

[ अनुमानं लक्षयति ]—

यत्र साध्यस्य संसिद्धिः साधनेन विधीयते ।
अनुमानमलङ्कारं तं वदन्ति विचक्षणाः ॥१५६॥

---

१ वृद्धिं गतः । २ रागस्य भेदेऽप्यभेदाध्यवसायादैक्यम् ।

यथा—

यत्र किञ्चिदपि लोललोचना
पश्यति स्मरशिलीमुखावली।
तत्र निष्पतति तद्धि सुभ्रुवो-
मन्मथोऽपि वशतामुपागतः ॥१५७॥

यथा वा—

यत्र पुंसि हरिभक्तिरुत्तमा
तत्र तिष्ठति दया दयानिधेः।
तद्धि भक्तिवशगो जनार्दनो-
भक्तलोकभवशोकमोचनः ॥१५८॥

[ परिकरं लक्षयति ]—

प्रत्याय्यते विशेष्यस्य यत्रोत्कर्षो विशेषणैः[1]।
अलङ्कारः परिकरः सुधीभिः सोऽभिधीयते ॥१५९॥

यथा—

यशोनिशाधीशविशोभिताखिल-
क्षमाधराम्भोधिनभोमहीतलः।
प्रतापसन्तापितवैरिमण्डलो-
रराज राजा[2] क्षितिपाकशासनः ॥१६०॥

१ साभिप्रायत्वे च विशेषणसद्भाव एवायमलङ्कारः। २ अत्रोदाहरणद्वये राज्ञो विशेषणानां साभिप्रायत्वम्।

यथा वा—

प्रतापतपनोत्तापतापितारिकुलाङ्गनः ।
राजते नृपतिर्दानैस्तोषिताखिलभूसुरः ॥१६१॥

[ व्याजोक्तिं लक्षयति ]—

व्याजेन गोपनं यत्र कथञ्चिद्व्यक्तवस्तुनः ।
व्याजोक्तिं तमलङ्कारं व्याहरन्ति मनीषिणः ॥१६२॥

यथा—

मध्येस्थिता गुरुजनस्य विलोक्य कान्तं
स्वेदाम्बुपूरिततनुः सुमुखी बभूव ।
ऊष्मागमस्य महिमाऽतिमहानिदानी-
मित्युक्तवत्यतिमृदुस्मितमाततान ॥१६३॥

अत्र नायिकया व्यक्तस्य सात्त्विकभावस्य गोपनम् ।

यथा वा—

प्रियमालोक्य[१] सुमुखी रोमाञ्चनिचयाञ्चिता ।
सस्मितं स्तुतिमारेभे मलयाद्रिनभस्वतः ॥१६४॥

[ परिसङ्ख्यां लक्षयति ]—

यदन्यस्य समानस्य व्यवच्छेदाय जायते ।
कथनं परिसङ्ख्यां तामाहुः काव्यविशारदाः ॥१६५॥

यथा—

किं ध्येयं सुधियां मुरारिचरणः किं कार्यमार्यव्रतं
किं रम्यं धरणीमणेः शुचियशः श्लाघ्या भृशं का दया ।

१ अत्रापि व्यक्तस्य सात्त्विकभावस्य गोपनम् ।

किं देयं सुजनाय चारु हृदयं किं भूषणं योषितां
लज्जा किं जनरञ्जनं सुविनयः किं चित्रमेतज्जगत् ॥१६६॥

इयं[1] प्रश्नपूर्विका परिसङ्ख्या ।

अप्रश्नपूर्विका यथा—

नारायणपदे प्रेम नच हेमगृहादिषु ।
चिन्ता परमधर्मेषु नाधर्मेषु मनीषिणाम् ॥१६७॥

[ अन्योऽन्य लक्षयति ]—

यत् परम्परमुत्कर्षैककारणत्वं पदार्थयोः ।
तदन्योऽन्यमलङ्कारं ब्रुवते काव्यकोविदाः ॥१६८॥

यथा—

हरिणा शोभते लक्ष्मीर्लक्ष्म्या च शोभते हरिः ।
जानक्या राजते रामोरामेणापि च जानकी ॥१६९॥

यथा वा—

धरण्या शोभते राजा राज्ञा च धरणी भृशम् ।
भारत्या भासते विद्वान् विदुषा चैव भारती ॥१७०॥

[ उत्तरं लक्षयति ]—

अनुपात्तमपि प्रश्नवाक्यं यत्र प्रकल्प्यते ।
उत्तरश्रुतिमात्रेण तदुत्तरमितीर्यते[2] ॥१७१॥

---

१ व्यवच्छेद्यस्य वाच्यत्वे शाब्दी गम्यत्वे चार्थीय भवति । २ इतरव्य-वृत्तितात्पर्यविरहे सत्यान परिसङ्ख्यातोभिद्यते त्वस्यासद्दनप्रश्नपूर्वकोत्तर रूपोद्वितीय प्रकार ।

यथा—

क्रेता विद्रुममुक्तानामहमेर वणिक्पते ।
गृहीत्वा मूल्यमुचितं त्वरितं सम्प्रयच्छ ताः ॥१७२॥

अत्र क्रतुरुत्तरेण वणिक्प्रश्नस्योन्नयनम् ।

[ सूक्ष्मं लक्षयति ]—

अन्यस्मै क्रियते यत्र सूक्ष्मार्थस्य प्रकाशनम् ।
केन चित् स्मारकेणेदं सूक्ष्ममित्यभिधीयते ॥१७३॥

यथा—

दूरादेव प्रियं ज्ञात्वा रतिलोलुपमानसम् ।
करोत्किसस्मिता तन्वी लघु[1] लीलाऽब्जमुद्रणम् ॥१७४॥

यथा वा रसकौस्तुभे—

समुपेते[2] निजदयिते गुरुसविधस्थायिनी सुमुखी ।
विलिखति नखेन भूमौ मुहुरपि विधुमण्डलं विदुषी ॥१७५॥

[ सारं लक्षयति ]—

उत्तरोत्तरमुत्कर्षप्रत्ययोयत्र जायते ।
सर्वालङ्कारसारस्तु सारस्तत्राभिधीयते ॥१७६॥

यथा—

देशेषु मिथिला[3] श्रेष्ठा तत्र सीरध्वजालयः ।
सतीशिरोमणिस्तत्र सीता रघुपतिप्रिया ॥१७७॥

---

१ शीघ्रम् । २ चन्द्रमण्डलवल्लोचनासेचनकत्वावगमनाय तल्लेखः ।
३ नगरीवाचकस्य देशे रूढिः ।

यथा वा—

सारं भवेऽत्र धरणी धरणौ पुरीयं
पुर्यां च हर्म्यपटलं रजताभमुच्चैः ।
हर्म्येऽपि फुल्लकुसुमोच्चयचारुतल्पं
तल्पे तथा प्रियतमा स्मरजैत्रहेतिः[1] ॥१७८॥

[ असङ्गतिं लक्षयति ]—

भिन्नदेशगतत्वेन कार्यकारणभूतयोः ।
अर्थयोरभिधाने स्यादसङ्गतिरलङ्कृतिः ॥१७९॥

यथा—

कोदण्डच्युतबाणो दाशरथेर्मैथिलीभर्तुः ।
पतति निशाचरनाथे[2] विदीर्यते दनुजवल्लभाहृदयम् ॥१८०॥

यथा वा—

गरलं मुखे खलानां सम्मुह्यति सज्जनः सहसा ।
तरुणीहृदि कुचभारो यूनां बत खिद्यते चेतः ॥१८१॥

[ समाधिं लक्षयति ]—

कारणान्तरसत्त्वेऽपि[3] यत्राकस्मिककारणात् ।
स्यात् सौकर्यं तु कार्यस्य समाधिः सोऽभिधीयते ॥१८२॥

---

१ हेतिरायुधम् । २ रावणे । ३ कारणान्तरागमन समुच्चये खलेकपोति-कान्यायेन इह तु काकतालीयन्यायेनेति भेदः ।

यथा—

गिरिजामानभङ्गाय व्याकुलस्य पिनाकिनः ।
रावणेनोपकाराय चालितो रजताचलः[1] ॥१८३॥

यथा वा—

भर्तुर्गमनरोधाय स्थितायाः पुरतो मम ।
साहाय्यमकरोदालि कोकिलः कलनिस्वनैः ॥१८४॥

[ समं लक्षयति ]—

[2]वस्तुनोस्तुल्यगुणयोर्योगस्यौचित्यचर्चया ।
प्रशंसनं विशेषेण समाख्याऽलङ्कृतिर्मता ॥१८५॥

यथा—

लावण्यातिशयेन निर्मितिकृतो धातुः परं कौशलं
सीता यद्रचिता क्षितौ मृगदृशां सौन्दर्य्यदर्पापहा ।
पुंसां रूपमदं च यद् दलयितुं रामोऽभिरामः कृतः
ख्यातं सम्प्रति सङ्गमे तदनयोर्वैदग्ध्यमस्याधिकम् ॥१८६॥

यथा वा—

पूर्वं रामस्वरूपतामयमितः कृष्णस्तदा सङ्गिनी
कुब्जेयं मयि संस्थिताऽन्य[3] सदृशी प्राणाधिका प्रेयसी ।
तस्मादत्र जनो समेत्य मथुरापुर्यां ममर्यादियो-
जीतः सम्प्रति सङ्गमः समुचितः श्लाघ्यस्तयोः सर्वथा ॥१८७॥

---

१ कैलासः । २ द्वयोरुत्कृष्टयोरपकृष्टयोर्वा योगस्य प्रशंसायां समम् ।
३ मृता ।

[ विषमं लक्षयति ]—

नोपैति घटनां यत्र द्वयोः सम्बन्धिवस्तुनोः ।
योगो विलक्षणतया विषमालङ्कृतिस्तु सा ॥१८८॥

यथा—

इयमलौकिककोमलता श्रुता
कृशतनुः क मनोज्ञतमा लता ।
क च कठोरकुठारनिपातनं
किमनयोरुचितः सखि सङ्गमः ॥१८९॥

यथा वा[1]—

जलदोऽयमिति ज्ञात्वा मयाऽसेवि वृथा घनः ।
हहिरस्तु जलं चञ्चुश्चर्णिता करकोत्करैः ॥१९०॥

[ प्रकारान्तरं लक्षयति ]—

जनकस्य गुणाद्यत्र विजातीयो भवेद्गुणः[2] ।
जन्यस्य तत्र विषमो द्वितीयः परिकीर्तितः ॥१९१॥

यथा—

युष्मत्पाणिभुजङ्गसङ्गमसमं सङ्ग्रामभीष्माङ्गणे
सम्प्राप्यासिभुजङ्गिकाऽमिततनुर्गर्भं दधौ याऽचिरात् ।
प्राप्ता ताम्बरमण्डले शुचियशः पिण्डाण्डमेषा पुरा
भूमीपाल तदेव सम्प्रति शशी विष्वक् समुज्जृम्भते ॥१९२॥

१ 'कर्तुं क्रियाफलावाप्तिर्नैवानर्थश्च यद्भवेत् ।' इत्यन्यत्र लक्षितस्य विषम-प्रकारान्तरस्यैवेदमुदाहरणम् । २ गन्धद्वटकगुणशब्दौ क्रिययोरप्युपलक्षकौ ।

[ विचित्रं[1] लक्षयति ]—

इष्टकार्यविरुद्धा चेत् कृतिरिष्टस्य कारणम् ।
विचित्रनामाऽलङ्कारः कृतिमिस्तर्हि कीर्त्यते ॥१६३॥

यथा—

अपमानं स्वमानाय जीवनाय रणे मृतिम् ।
अङ्गीकरोति सानन्दं को मूढः किङ्करात् परः ॥१६४॥

[ अधिकं लक्षयति ]—

यदाधारमहत्त्वार्थमाधेयाधिक्यकीर्तनम् ।
अधिकं तमलङ्कारं प्रथमं परिचक्षते ॥१६५॥

यथा—

धराधरास्तुङ्गतरङ्गवत्यो-
नग्यो नदा भूमिरुहाः समुद्राः ।
लीलां यदङ्के कलयन्ति सेयं
प्रसूनवद् भूर्भुजगेन्द्रमौलौ ॥१६६॥

[ कारान्तरं लक्षयति ]—

यदाधेयमहत्त्वार्थमाधाराधिक्यकीर्त्तनम् ।
अधिकारव्यमलङ्कारं द्वितीयं तं विदुर्बुधाः ॥१६७॥

यथा—

विरञ्चिर्वैकुण्ठो[2] धनपतिरनन्तः शतमखः
प्रचेताः शीतांशुर्मरुदहिमधामा हुतवहः ।

१ उन्नीतकारेण त्वयं विषमेऽन्तर्भावितः । २ वैकुण्ठो विष्णु. ।

कृतान्तश्च प्रेम्णा परिचरति यां पुण्यजननी-
मनङ्गारिर्गङ्गां वहति शिरसा तामनुपलम् ॥१९८॥

[ प्रत्यनीकं लक्षयति ]—

प्रतिपक्षोत्कर्षफला प्रतिपक्षाश्रितस्य या ।
तिरस्क्रिया प्रत्यनीकं भाषन्ते काव्यकोविदाः ॥१९९॥

यथा—

भवद्यशोभिः सततं सितीकृते
नभःस्थले प्राप्तपराभवः प्रभो ।
भवद्द्विषां स्वर्गजुषां मृगीदृशः
प्रसह्य सन्तापयति क्षपापतिः ॥२००॥

अत्र त्वमापराभूतस्त्वयि प्रतिकर्तुमक्षमश्चन्द्रस्त्वदीयाः सन्तापयतीति बोध्यते ।

यथा वा—

[1]शरीरकान्त्या भवता विनिर्जितो-
हरे मनोभूः प्रतिकर्तुमक्षमः ।
त्वदाश्रितं वल्लववल्लभाकुलं
समीक्ष्य लक्ष्यं कलयत्यनुक्षणम् ॥२०१॥

[ मीलितं लक्षयति ]—

निगूहनं पदार्थस्य समानेनैव लक्ष्मणा ।
यत् पदार्थान्तरेणैतन्मीलितं कथितं बुधैः ॥२०२॥

---

१ उभयत्र क्रमेण राक्षस्य हरेश्च चोत्कर्षो व्यज्यते ।

यथा—

नीत्वा[1] करेण विपुलं नवनीतगोलं
कृष्णः पलाय्य यमुनासलिलेगतस्थे ।
तत्रागताऽपि कुपिता त्वरितं यशोदा
पूरात्[2] पृथङ्न तनयं प्रबभूव बोद्धुम् ॥२०३॥

यथा वा—

सपत्नीस्तनकस्तूरीलाञ्छितं वीक्षमाणया ।
वक्षः श्रीकृष्णचन्द्रस्य राधया नैव लक्षितम् ॥२०४॥

[एकावलीं लक्षयति]—

विशेषणतया पूर्वं पूर्वं प्रति परं परम् ।
स्थाप्यते चेत् तदा प्राज्ञैः प्रथमैकावलीरिता ॥२०५॥

यथा—

मधौ प्रमोदाय रतार्थिनां निशा-
निशाः शशाङ्कस्य कलाभिरुज्ज्वलाः ।
कलाः शशाङ्कस्य कलङ्कवर्जिता-
मनोभवस्यैकमहायतामिताः ॥२०६॥

[प्रकारान्तरं लक्षयति]—

पूर्वपूर्वपदार्थेषु विशेषणतया यदि ।
व्यपोह्यन्ते[3] परपरे द्वितीयैकावली तदा ॥२०७॥

---

१उभयोरेकवर्णतया भेदाग्रह.। २ यमुनासलिलसमूहात् । ३ निराक्रियन्ते ।

यथा—

न तत् पुरं यत्र न सन्ति सज्जना-
न सज्जना यत्र न वैष्णवी कथा।
कथा न सा यत्र रतिर्न चेतसो-
रतिर्न सा या न विमुक्तिदायिनी ॥२०८॥

यथा वा—

न तन्मुखं यत्र सचारुयौवनं
न लोचनं यत्र कटाक्षमञ्चितम्।
न वा कटाक्षः स च मञ्जुलभ्रुवो-
न येन यूनो हृदयं विदार्यते ॥२०९॥

[स्मृतिं लक्षयति]—

समानदर्शनोद्बुद्धसंस्कारजनिता स्मृतिः[1]।
अनुभूतपदार्थस्य स्मृत्यलङ्कार उच्यते ॥२१०॥

यथा—

[2]कलाभिरापूरितमिन्दुमण्डलं
मनोहरं कालकलङ्कभासितम्।
समीक्ष्य लोलेक्षणमञ्जनाञ्चितं
स्मराम्यहं लक्ष्मण मैथिलीमुखम् ॥२११॥

१ स्मरणात्मक ज्ञान। २ श्रीरामस्योक्तिरियम्।

यथा वा—

कुरङ्गस्य वनप्रान्ते प्रसमीक्ष्य विलोचनम् ।
सौमित्रे चेतसा सैव कुरङ्गाक्षी निरीक्ष्यते ॥२१२॥

[ भ्रान्तिमन्तं लक्षयति ]—

अप्राकरणिकत्वेन स्यात् प्राकरणिकस्य यत् ।
संवेदनं[1] भ्रान्तिमान् स नाम्नाऽलङ्कार इष्यते ॥२१३॥

यथा—

प्रवालरुचिरे पाणौ मुक्ताः कोकनदत्विषः ।
निरस्यति सरोजाक्षी मुग्धा गुञ्जाधिया बहिः ॥२१४॥

यथा वा—

गङ्गोत्सङ्गसमुद्भूतं निशखण्डं विभावयन् ।
भोक्तुं हरशिरश्चन्द्रं जिघृक्षति गजाननः ॥२१५॥

[ प्रतीप लक्षयति ]—

आक्षेप उपमानस्य प्रतीपः प्रथमो मतः ।
द्वितीयस्तु तिरस्कारफला तस्योपमेयता ॥२१६॥

वैयर्थ्यमुपमानस्य किमर्थमिदमेप यः ।
आक्षेपः स तृतीयोऽपि प्रकारस्तस्य कीर्तितः ॥२१७॥

यथा—

लावण्यैकतरङ्गिणीं सुवदनां वाचा पिकद्वेषिणीं
चञ्चल्लोचनशालिनीं च भवतीं सृष्ट्वा विधात्रा पुनः ।

---

[1] ज्ञानम् ।

किं विद्युल्लतिका कृता विरचितः किं चाऽङ्कराजी विधुः
किं पियूपरसः कृतोऽनिलचलं किं निर्मितं पङ्कजम् ॥२१८॥

यथा वा—

उग्रसत्यगिरं महाबलवरं शूरं रुचामाश्रयं
दातारं धरणीमणे सुयशसं सृष्ट्वा भवन्तं क्षितौ ।
धात्रा किं रचितः स धर्मतनयः[1] किं भीमसेनो युवा
किं[2] जिष्णुर्नकुलश्च कर्णनृपतिः किं रन्तिदेवः शिबिः ॥२१९॥

[सामान्यं लक्षयति ]—

गुणसाम्यप्रभावेण यदैकात्म्यावभासनम् ।
द्वयोः पदार्थयोरेतत् सामान्यं परिकीर्तितम् ॥२२०॥

यथा—

नीलवासोवृता तन्वी कस्तूरीपङ्कचर्चिता ।
तमिस्रासु च घोरासु सुखं यात्यभिसारिका ॥२२१॥

यथा वा—

श्रीखण्डपङ्कपटलं धवलाश्च माला-
बाला विधाय वसनं हिमशैलशुभ्रम् ।
चन्द्रप्रभैकमिलिता चलिताऽभिसारे
नालक्ष्यते सहचरेण मनोभुवेव[3] ॥२२२॥

१ युधिष्ठिरः । २ अर्जुन । ३ नलक्ष्यते ···नापीत्यर्थः ।

विशेषं लक्षयति ]—

विना प्रसिद्धमाधारं याऽऽधेयस्य व्यवस्थितिः ।
विशेषनामाऽलङ्कारः प्रथमः स प्रकीर्त्तितः ॥२२३॥

एकस्य युगपद् वृत्तिरनेकविषया पुनः ।
एकरूपतया सोऽयं द्वितीयः समुदाहृतः ॥२२४॥

कार्यान्तरं विदधतः कार्यस्यान्यस्य वस्तुनः ।
यद् विधानमशक्यस्य सविशेषस्तृतीयकः ॥२२५॥

यथा—

तव कीर्त्तिलता देव व्योम्नि विस्तारमागता ।
तारकाः कलिकास्तस्याः कुसुमं विधुमण्डलम् ॥२२६॥

यथा वा—

त्वमेव वससि स्वान्ते कान्ते बहिरपि स्फुटम् ।
कुसुमेषोः प्रभावेण त्वन्मयं जगदेव मे ॥२२७॥

यथा वा—

भवतीं सृजता बाले सृष्टा किं नैव वेधसा ।
लावण्यवापिका काऽपि चन्द्रेन्दीवरशालिनी ॥२२८॥

तद्गुणं लक्षयति]—

स्वगुणं यत् परित्यज्य पदार्थः प्रतिपद्यते ।
अत्युत्कृष्टं परगुणं तद्गुणः स प्रकीर्त्तितः ॥२२९॥

यथा—

ओष्ठविद्रुमकान्त्या[1] मे दन्ता माणिक्यभामिताः ।
कान्ते श्वेतस्मितेनाशु पुनस्ते धवलीकृताः ॥२३०॥

यथा वा—

श्रीकृष्णरुचिसम्पर्काद् राधा श्यामलतां गता ।
तदीयस्मितकर्पूरैरानीता स्वां रुचिं पुनः ॥२३१॥

[ अतद्गुणं लक्षयति ]—

अप्रस्तुतो न्यूनगुणः प्रस्तुतस्य गुणं यदा ।
उत्कृष्टमपि नादत्ते तदैव स्यादतद्गुणः[2] ॥२३२॥

यथा—

सरागे हृदये तस्याः सदा सुन्दर तिष्ठसि ।
मनागपि न रक्तोऽसि किमिदं चरितं तव २३३॥

[ प्रकारान्तरं लक्षयति ]—

अप्रस्तुतं वस्तुरूपं यदा प्रस्तुतवस्तुना ।
नादीयतेऽचलत्वेन तदाऽन्यः स्यादतद्गुणः ॥२३४॥

यथा—

गङ्गाजलेन धौतस्य यमुनासलिलेन वा ।
शङ्खस्य शुक्लता सैव वर्धते ह्रसते न वा ॥२३५॥

[व्याघातं लक्षयति]—

एकेन साधितं वस्तु साधयेच्चेत् परोऽन्यथा ।
उपायेन तु तेनैव व्याघातस्तर्हि कथ्यते ॥२३६॥

---

१ अत्र द्विधा तद्गुणः । २ सामान्यविशेषभावाद् विशेषोक्तेरस्य वैलक्षण्यम् ।

यथा—

करस्पर्शेन नलिनीं सायं विधुरजिग्लपत् ।
आजिह्लदद् रविः प्रातः करस्पर्शेन तां पुनः ॥२३७॥

[सृष्टिं लक्षयति]—

चमत्कारप्रद्दरेककाव्येऽलङ्कारयोर्मिथः ।
स्थितिर्या नैरपेक्ष्येण सा संसृष्टिरिहोच्यते ॥२३८॥

यथा—

मृनायासे वासः इत्यादौ पूर्वोक्तश्लोके । तत्र हि छेकानुप्रासपदश्लेषयोर्नैर-
पेक्ष्येण स्थितिः ।

[सङ्करं लक्षयति]—

अङ्गाङ्गिभावे सन्देहे तथैकाश्रयवेशने ।
सापेक्षताऽलङ्कृतीनां सङ्करस्त्रिविधः स्मृतः ॥२३९॥

यथा—

[1]लावण्यामृतजलधौ मुखशशिनो मज्जतः सुदृशः ।
वेणी धौतकलङ्कश्रेणीत्यवधारितं विदुषा ॥२४०॥

अत्र रूपकोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः । प्रकारान्तरोदाहरणे परतोमृग्ये ।

'वेणीदत्त' कवेः क्लृप्ता दीप्ताऽलङ्कारमञ्जरी ।
इयमास्तां चिरं विद्वच्छ्रीकप्रमोदिनी ॥२४१॥

इति मैथिलमहाकविवेणीदत्तशर्मनिर्मिताऽलङ्कारमञ्जरी सम्पूर्णा ।

---

१ पद्यमिदमुत्प्रेक्षोदाहरणत्वेन प्रागुल्लिखितम् ।

# मिथिलाविद्यापीठग्रन्थमाला

## १. प्राचीनाचार्यग्रन्थावली

१. तत्त्वचिन्तामणिः—गङ्गेशोपाध्यायविरचितः आलोक-दर्पण-संवलितः। प्रत्यक्षखण्डे प्रामाण्यवादान्तः प्रथमो भागः। १९५७ मूल्यम्—१२.००

२. काव्यपरीक्षा—श्रीवत्सलाञ्छनभट्टाचार्यविरचिता। १९५६ मूल्यम्—८.००

३. पारिजातहरणम्—महाकाव्यम् कविकर्णपूरविरचितम्। १९५६ मूल्यम्—८.००

४. काव्यलक्षणरत्नश्रीः—सिंहलाचार्यरत्नश्रीज्ञानविरचिता दण्डि-काव्यादर्शटीका। १९५७ मूल्यम्—१५.००

५. वैशेषिकदर्शनम्—अविज्ञातकर्तृकप्राचीनव्याख्योपेतम्। १९५७ मूल्यम्—६.५०

६. अभिज्ञानशकुन्तलम्—कालिदासकृतं शङ्कर-नरहरिकृतटीकाद्वयोपेतम्। १९५७ मूल्यम्—१५.००

७. आगमडम्बरम्—नाटकं जयन्तभट्टकृतम्। यन्त्रस्थम्।

८. लीलावती—भास्कराचार्यकृता दामोदरमिश्रकृतवासनोद्भासिता ज्योतिषग्रन्थः १९५९ मूल्यम्—१४.००

९. मन्त्रकौमुदी—देवनाथठक्कुरकृता। १९६० मूल्यम्—६.००

१०. कुमारिलकारिकावली—कुमारिलस्वामिपादकृता।

११. रसतरङ्गिणी—रामानन्दठक्कुरकृता। १९६१ मूल्यम्—२.२५

१२. अलङ्कारमञ्जरी—वेणीदत्तकृता। १९६१ मूल्यम्—२.००

१३. पदार्थीयदिव्यचक्षुः—उमापत्युपाध्यायकृतम्। १९६१

१४. रत्नकोशमतवादार्थः— यन्त्रस्थः।

१५. लक्षणमाला—उदयनकृता तार्किकप्रवरशशिनाथझाकृतटीकासहिता। यन्त्रस्था।

१६. लक्षणावली—उदयनकृता केशवभट्टकृतटीकासहिता। यन्त्रस्था।

## २. अर्वाचीनाचार्यप्रबन्धावली

१. गमानतारप्रकीर्णप्रबन्धावली—प्रथमः खण्डः। १९५६ मूल्यम्—११.००

२. त्रिनलावच्छेदकतावादः—नव्यन्यायग्रन्थ. पण्डितप्रवरश्रीशशिनाथ (झा) शर्मकृतः १९५६ मूल्यम्—४.५०

३. लिङ्गवचनविचारः—व्याकरणग्रन्थः पण्डितदिनबन्धुझाविरचितः १९५४ मूल्यम्- ४.००

४ विमण्डनवकविचारः—ज्योतिषग्रन्थ. पण्डितश्रीदयानाथ झा विरचितः १९५४ मूल्यम्—२.००

## 3 Studies in English

1. *History of Mithila*:—by Dr. Upendra Thakur [1956 A.D.] Price Rs. 17 50
2. *History of Navya.Nyaya in Mithila*:—by Prof. Dinesh Chandra Bhattacharya [1958 A. D.] Price Rs. 13 50
3. *Vachaspati Misra on Advaita Vedanta*:—by Dr. S. S. Hasurkar [1959 A. D.] Price Rs. 15 00

## ४. महायानसंस्कृतग्रन्थावली

१. अवदानशतकम्— मूल्यम् -१२ ५०--१०-००

२. ललितावस्तरः— मूल्यम्-१२ ५०- १०.००

३. दिव्यावदानम्— १९५६ मूल्यम्—२०.००,—१६.००

४. मध्यमकशास्त्रम्— १९५६ मूल्यम्- १२.५०,—१०.००

५. अवदानकल्पलता—प्रथमोभाग मूल्यम् १२.५०,—१०.०० } भागद्वय सहैवे

६. अवदानकल्पलता—द्वितोयोभाग मूल्यम १२.५०,—१०.०० } ग्राह्यम्।

७ जातकमाला— मूल्यम्—१२ ५०,—१० ००

### मुद्रणार्थं प्रस्तुताः ग्रन्थाः

न्यायचतुर्ग्रन्थिका—न्यायसूत्र-भाष्य-वार्तिक-तात्पर्य-परिशुद्धिरूपा सटोका सूत्रत्रयात्मक प्रथम. खण्ड।

सुलोचनामाधवचम्पू:—नैयायिकप्रवरधर्मदत्त(बचा) झा कृता।

श्रीमद्भागवतम्—अनेकसम्प्रदाय व्याख्यासहितम्।

-आलोकदर्पणान्वित. प्रत्यक्षखण्डे द्वितीयो भागः।